॥ श्रीः ॥

श्रीयुतसर्वदर्शनाचार्यवेदश्रौतस्मार्तपारावारपारीण-
रानडोपाख्यबालशास्त्रिणो

# जीवनवृत्तान्तः ।



काशिकराजकीयप्रधानपाठशालायां साहित्य-
शास्त्रस्य प्रधानाध्यापकेन

गङ्गाधरशास्त्रिणा

निरूपितः ।

तदीयशिष्येण साहित्याचार्यपदवीं लब्धवता त्रिपाठ्युपाख्यरघुनन्दन-
शर्मणा विषमपदटिप्पणीप्रकाशनपुरःसरं संशोधितः ।

---

काशिकपाठशालाप्रधानाध्यक्षश्रीयुतडाक्तर-
थिबोसाहिबमहाशयानुमत्या

---

श्रीकाश्यां
मेडिकल-हाल-नामक-यन्त्रे मुद्रितः ।

सं· १९३९ आ· सु· ७ सोमे

श्रीः

# श्रीविश्वेश्वरो विजयते ।

## श्री ६ बालशास्त्रिजीवनवृत्तान्तः ।

अस्ति स्वस्तटिनीसमीपवसतिः सङ्केतभूः श्रेयसां
काशी नाम पुरी श्रुतिस्तुतगुणा विश्वेश्वराधिष्ठिता ।
दुष्प्रापं विजितेन्द्रियैरपि पदं तद् ब्रह्मणः शम्भुना
यस्यामेव सदा विनश्वरतनूमूल्येन विक्रीयते[1] ॥ १ ॥

आसीन्निःसीमधीमज्जनविनुतयशा वेदविद्यानदीष्णः
श्रीमद्गोविन्दशर्मा शिवपदनिरतो दाक्षिणात्योऽत्र विप्रः ।
तिष्ये[2]प्युग्रार्यधर्मोद्धरणकृतमतिं कल्पसूत्रप्रणायं
सत्याषाढं मुनीन्द्रं भुवि सकलबुधा मेनिरे भूसुरं यम् ॥ २ ॥

असौ विधिवदधीतनिजवेदो व्रतस्नातः प्रसाद्योपाध्यायमध्यापयन्नन्तेवासिनोऽङ्गीकृत्य गार्हस्थ्यं धिन्वन् देवर्षिपितृगणान् पितृणामानृण्यमाप्तो बहुषु निजाहितेषु गर्भेष्वपूर्णेषु विशीर्णेषु दूयमानमानसो विचार्य कीना[3]शबलनाशनं गरलाशनं सरभसं शरभरूपमुपास्य भगवन्तं शङ्करं समवाप तनयमेकमेव ॥

जन्मोत्सवेऽस्य मुदितः कृतजातकर्मा
श्रीविश्वनाथ इति नाम विधाय तस्य ।
चूडाविधिं च विरचय्य समीहमानो
मौञ्जीविधिं विधिसमीपमवाप दैवात् ॥ ३ ॥

तदनु यथावन्निर्वर्त्यामुष्यौर्ध्वदैहिकीं क्रियामसावचिराद्रासादितसकललिपिप्रवीणभावो मनीषाविशेषपरितोषितेन गुरुणा पञ्चमएव वत्सरे विधिवदुपनिन्ये । ततः प्रभृत्येव चाध्याप्यतायं याजुषीं शाखामवेदाधिगमोचितेषु दिवसेषु वेदाङ्गानि च ॥

---

१ अनेन प्रदर्शितमूल्येतरप्रतिबन्धकराहित्यं व्यज्यते । २ कलिः । ३ यमः ।

गुरुवरमुखनिर्यद्वेदवागेकवार-
ग्रहणजनितदार्ढ्याशेषशाखो ऽक्रमेण ।
कृतगुरुत्वरिवस्यो ऽशेषवेदाङ्गपारं
परिचितमिव पूर्वं तूर्णमापैष धीमान् ॥ ४ ॥

अनन्तरं च श्रौतस्मार्तकर्मैकागदपाण्डित्यमण्डितधिषणो धिषणोपमः सप्तमएव वत्सरे ऽमत्सरेण चेतसा नानाविधदिगन्तरागतपरःसहस्रविद्वद्वरपरीक्षणविचक्षणं प्रतिपक्षक्षोणिपतिशिक्षणदक्षकौक्षेयकं चित्रकूटगिरिमधिवसन्तं श्रीविनायकरावनृपपुङ्गवं वार्षिक्यां परीक्षायामवलोक्य वितरति स्म तत्राभूतपूर्वां परीक्षामसौ मध्यमलोकचतुराननः ॥

यद्द्वा[१]दशान्यिकतया ऽपि न पारयन्ति
शस्तं बुधा निगदितुं किल वालखिल्यम् ।
ऐका[२]न्यिको ऽपि न बभूव यतो ऽत्र तेन
प्रापापदा[३]नमिह बालसरस्वतीति ॥ ५ ॥

पदक्रमजटाघनाद्यखिलवेदचर्चार्चितः
सदर्पबुधमण्डलीवचनखण्डने पण्डितः ।
ततः प्रभृति सो ऽभवत्सकलभूतलख्यातिमान्
नृपार्चितपदद्वयः सकलवैदिकेष्वद्वयः ॥ ६ ॥

मानसं मदमशेषवैदिका यज्जहुः पठति तत्र सुस्वरम् ।
मानसंमदमवाप भूपते राङ्कवांशुकधनोन्नतं स तत् ॥ ७ ॥

अनवमो नवमे किल हायने ऽखिलपदक्रमपाठविशारदः ।
मनसि कस्य न विस्मयमार्पयज्जनयति स्म ततो गुरुसंमदम् ॥ ८ ॥

ततः परं प्रशस्यमानो निरुपमानस्तत्रत्याशेषधनिकजनोपढौकितबहुधनो गुणातिरेकरक्तराजपुङ्गवरचितपरिपुष्टवृत्तिको ब्रह्मावर्तक्षेत्रं प्रयाय

१ यस्य परीक्षाकाले द्वादशाऽपपाठा भवन्ति स द्वादशान्यिकः । २ यस्यैको ऽपपाठो भवति स ऐकान्यिकः । ३ अपदानं कर्मवृत्तम् ।

तत्रत्यसम्राट्चरमहाराजबहुमानितो गालवक्षेत्रमुपेत्य द्वादशदर्शनीपारीणमखिलभूतलभूषणं श्रीकृष्णशास्त्रिणं परितोष्य निजमनीषया तदादिष्टगालवक्षेत्रभूपकल्पितवार्षिकविपुलवृत्तिको विनयावनतपूर्वकायो गुरूणामनुमतिं दाक्षिणात्यपरिवृढस्य समासाद्य काशिकां यतते स्म आख्यायिकाव्यानि सपरिकराणि च दर्शनानि करतलामलकीकर्तुं स भारतीपुरुषावतारः ॥

अनेकविबु[1]धार्चितो गुरु[2]विशालवाग्भूषितः
सु[3]खास्पदतया श्रुतो भृशविराजदुच्चैः श्र[4]वाः ।
त्रिविष्टपसमोप्यभून्न स सुधीः सुरा[5]णां प्रियो
न चापि शतमन्यु[6]मानिति मनो भृशं विस्मितम् ॥ ९ ॥
मोचा[7] चूतसुधामदैकदमनं स्वाभाविकं यद्वचः
प्रागल्भ्यप्रतिभानुभावभरितं चेतश्चमत्कारदम् ।
उद्यत्पार्वणपूर्णशीतकिरणान्यक्कारिकीर्त्याश्रयो
नूनं रीतिमलौकिकीमनुसरन् कोप्येष देवोत्तमः ॥ १० ॥

अथासावल्पेन कालेन सम्पादितप्रौढव्युत्पत्तिको व्रजन् त्रित्रान् वत्सरांश्चित्रकूटगिरिं नन्दनारामविहाररसिके तत्र राजके तर्ककार्कश्यं सम्पिपादयिषुः समालोच्य निजधीविभवानुरूपमभिरूपद्विजोत्तमचक्रवर्तिनं श्रीकृष्णशास्त्रिणं निजदेशिकं सम्प्राप्य गालवक्षेत्रं प्राकाशयत् पुरस्कृत्य प्रश्रयममुं प्रति निजाशयमभिदधे च सादरममुना ॥

त्वं बाल[8]द्विजराजतां किल वहन् चित्रं न दोषाकरः[9]
सम्पूज्योसि महेश्व[10]रेण शिरसा सन्मार्गनित्या[11]श्रितः ।

१ देवैः पण्डितैश्च । २ बृहस्पतेरध्यापकस्य च । ३ सुखस्य जनकतया उत्तमाकाशाधारतया च । ४ अश्वविशेषो महती कीर्तिश्च । ५ देवानां मद्यानां च । ६ शतमन्युरिन्द्रः शतं कोपाश्च । ७ कदली । ८ बाल एव विप्रश्रेष्ठतां बालचन्द्रतां च । ९ दूषणाश्रयश्चन्द्रश्च । १० महाराजेन शिवेन च । ११ सज्जनमार्गे नक्षत्रमार्गे च ।

कस्त्वां पाठयितुं किमत्र बहुना वक्तुं त्वया च क्षमो
भाग्यैर्मे ऽद्य निमित्ततां विरचयन् सानुग्रहो मय्यसि ॥ ११ ॥
नानातर्कवितर्ककर्कशतरा नैसर्गिकी ते मतिः
स्वल्पैरेव दिनैः पुरातनबुधान्नूनं स्वयं जेष्यति ।
तस्माद्वैदिकमार्गरक्षणकृते मत्वा ऽवतारं निजं
मीमांसासु गुरूकुरु त्वमधुना मामित्यहं प्रार्थये ॥ १२ ॥
कण्ठे यस्य लुठन्ति वैदिकगिरः साङ्गाः किमुत्कण्ठिताः
कुण्ठीभावमुपैति यस्य पुरतो जीवो[1]ऽपि युक्त्युक्तिषु ।
मीमांसास्ववशिष्यते किमपरं यत्नेन लभ्यं नवं
मन्ये मान्यममुं विभाव्य वचनं तस्यैव धन्येऽतनोत् ॥ १३ ॥
किं मां वञ्चयसि स्वयं शतधृते त्वं जीवकोट्याश्रितं
श्रीमद्बालसरस्वतीमिषममुं धृत्वा ऽवतारं नवम् ।
नाहं पाठयितुं क्षमो ऽस्मि कथमप्येनं किमेवं विधिं
वक्तुं भूतलमत्यजद्द्रुहरसौ तस्योक्तिभिर्विस्मितः ॥ १४ ॥

अथैष वैशेषिकाशेषविषयविशेषज्ञतामभिलष्यन् निशम्य न चिरादागमिष्यन्तं पुण्यग्रामप्रतिष्ठितसाम्प्रतिकसम्राट्समुत्तेजितसंस्कृतसरस्वतीसदनसमस्तप्रशस्तदर्शनपारतारितपरःसहस्रशिष्यं तं श्रीमोरशास्त्रिणं गालवतेत्रप्राड्विवाकपरिवृढपदमलङ्करिष्यन्तमाजानजनितविपश्चिज्जनसमागमकुतूहलो विधाय वसतिं तत्रैव समागते ऽमुष्मिन् सू[3]र्यकसूर्ये सादरं परिसमाप्य तत एव द्वादशलक्षणीशेषं तनयनिर्विशेषमुपलालितो ऽमुना गुणैर्धुनानो विप्रतिपन्नान् प्रसन्नान् विरचयन् पौरजनानुपसन्नान् सम्भावयन् समुचितोपचारेणासप्तषोडशानि जन्मतो हायनानि तत्रैवानुभवन् वाग्मिनां धुर्ये हर्यकतानचेतसि तस्मिन्नाचार्यवर्ये पर्येषण[4]येव दिव्यसुखानां

१ बृहस्पतिः । २ ब्रह्मन् । ३ सूरिषु पण्डितेष्वेकोऽद्वितीयः सूर्यस्तस्मिन् ।
४ इच्छया ।

समारूढे परं पदं नितान्तवृनो ऽनूनो ऽपि निखिलवसुमतीवास्तव्यविबुधेभ्यो ऽसौ तत्रत्यनिखिलविबुधेभ्यो[1]पयाचितावासो निवासो निखिलविद्यानां निरीक्ष्य तत्रैव समागतं पाणिनीयतन्त्राज्जीवनायेव पुनरवतीर्णं भगवन्तं पतञ्जलिं विवादधीर[2]सिकतासमेतधीररसिक[3]ताचतुर्दिशप्रक्षेपणप्रचण्डवातं निखिलगुणरत्नरत्नाकरं निशाकरं सहृदयकुमुदवनानां नानाविधप्राज्ञसम्भृतशोभासु गालवपुराधीश्वरसभासु सर्वदैव जयिनं नितान्तदयिनं कृत्स्नभारतभूतलप्रसिद्धमहिमानं श्रीराजारामशास्त्रिणं स्पृहयन्नमुष्य परिचर्यायै सविनयमुपसद्य सद्य एव निगद्य निजाशयं निश्चितमना मनागपि वसतिं तत्र नगरे विहातुं समनुज्ञाप्य कानि चिदेव दिनानि तत्रत्यपार्थिवानुरोधेन निवस्तुकामं गुरुवरश्रीराजारामशास्त्रिणं सत्वरं समवाप काशिकाम् ॥

येषां द्वादशदर्शनीनिपुणता लोकेषु विख्याप्यते
यद्वाग्वज्रविशीर्णवादिगिरिभिः प्राप्ता दिगन्ता द्रुतम् ।
सम्राडादिकदुर्विधावधिजनैर्नोल्लङ्घितं यद्वचो
यच्छात्रैरधुना ऽपि सर्वविषये विद्याः प्रतिष्ठापिताः ॥ १५ ॥

प्रकटनिजविहारैः काशिकां पूतमार्गां
रचयितुमिव काशीनाथमत्रावतीर्णम् ।
तदवधि गुरुकाशीनाथशास्त्र्याख्यमेनं
स भृशमुपसिषेवे नाप यावद्गुरुः सः ॥ १६ ॥

वर्षीयांसमुपाश्रिता ऽद्य खलु मां विद्याभिधा वल्लरी
नोप[4]घ्नं लभते नवं यदि ततो भङ्गं द्रुतं यास्यति ।
स्यादेषा सफला कथं न्विति चिरं सञ्चिन्तयंश्चेतसा
पार्श्वं प्राप्य तमुत्तमं स मुमुदे निश्चिन्ततामाप च ॥ १७ ॥

१ लुब्धा धनिनः । २ विवादबुद्धौ रसिकता स्पृहा । ३ धीराः पण्डिता एव सिकता वालुका असारत्वादिति भावः । ४ उपघ्न आश्रयः ।

आहूतः कर्तुमार्यैः सपदि कुविधबोद्धाहशङ्कासमाधिं
प्रोद्दामाशेषवादिद्विरदविदलनाकुण्ठकण्ठीरवेन्द्रः ।
सम्प्राप्याथ स्वगेहं विपुलबहुमतिं प्राप्य भूपात्सपर्यां
श्रीराजारामशास्त्री विनयनतगुरुस्तेन सामोदमूचे ॥ १८ ॥

शिष्याभ्रा[१]न्तिकपूर्णदर्शनरसैः कीर्तिं महीव्यापिनीं
कुर्वन्तं नयसागरं प्रतिपदा[२]रूढो ऽनिशं जृम्भयन् ।
यः स्वीयां द्विज[४]राजतां प्रकटयेत् पुष्यान् समस्ताः कला[५]
नव्यो बालशशी स सम्प्रति भवत्सूर्याश्र[६]याद्वर्धताम् ॥ १९ ॥

इत्थं गिरं गुरुवरात्स निशम्य धीर-
स्तं पाणिनीयनयसागरकर्णधारः ।
पारीणमारचयति स्म पदे[७]ऽचिरेण
तुष्टः प्रकृष्टतमया किल तस्य बुद्ध्या ॥ २० ॥

तर्कव्याकृतिसाहितीसुहितवाग्वेदान्तशान्ताशयो
मीमांसास्वतिमांसलः कपिलगीर्व्युत्पादने कोविदः ।
स्वल्पैरेव दिनैः पुराणनिपुणस्तन्त्रस्वतन्त्रः सुधी-
र्योगे गीतमतिः स तेन विदधे भूपण्डिताखण्डलः ॥ २१ ॥

मोचा नीचतरा सिता विहसिता धिक्कारयोग्या सुधा
माकन्दो ऽपि च निन्दनीयविभवो द्राक्षा न वीक्षोचिता ।
वर्षारम्भविजृम्भमाणसलिलाऽमर्त्यापगासोदरे
वाग्गुम्फे ऽस्य समस्तशास्त्रविषयान् सम्यक् परिष्कुर्वति ॥ २२ ॥

---

१ शिष्येष्वभ्रान्तिकं भ्रमरहितं पूर्णः शिष्या एवाभ्राणि मेघास्तदन्तिके पूर्णश्च । २ यशः पङ्कं च । ३ प्रतिपत्तियावारूढः प्रतिपदमारूढः प्रवृद्धश्च । ४ विप्रश्रेष्ठतां चन्द्रतां च । ५ षोडशभागान् चतुःषष्टिकलाश्च । ६ रवेः सूरेः पण्डितस्य च । ७ व्याकृतौ ।

काशीस्थराजवरनिर्मितपाठशाला-
मुख्याधिकार्यथ समादरमानपूर्वम् ।
व्युत्पादनाय विनियोजयति स्म साङ्गे
हूणाग्रणीः प्रभुवरग्रिफिथाभिधानः ॥ २३ ॥

अथासौ पञ्चविंशतितमएव हायने समवाप्यादेशं प्रभुवरस्य पञ्चविंशकव्युत्पादनकृतोत्साहः सोपपत्तिकानि सर्वाण्येव शास्त्राणि सङ्क्रमयति स्म शिष्यशुक्तिकाहृदयेषु सुकृतिजनोपभोगयोग्यानि सलिलानीव स्वातीघनाघनो वसुमतीवाचस्पतिः ॥

सा व्युत्पादनचातुरी निरुपमा सा कल्पनाकल्पता
ग्रन्थग्रन्थिविभेदियुक्तिकथने सा भास्वरा च त्वरा ।
नानादेशसमेतशिष्यनिवहे ऽकम्पा ऽनुकम्पा च सा
प्रारम्भन्त तदाद्यहम्प्रथमिकां शिष्योघजीवातवे ॥ २४ ॥
वादे सादरपूजितान् बुधजनैर्जल्पेष्वनल्पक्रमान्
शिष्यान् खण्डनपण्डितान् स विदधद् वैतण्डिकानां गिराम् ।
आशीताचलसेतुभूतलभृतां कीर्तिं शशिस्पर्द्धिनी-
मातेने चिरकालशोभिविभवां शास्त्रौघमध्यापयन् ॥ २५ ॥
नूनं को ऽपि स वेदशास्त्रजलधिः शीलैकरत्नाकरो
यच्छिष्याम्बुदवृन्दसङ्क्रमितवाक्तोयैर्मही प्लावयन् ।
विद्याकल्पलताः प्रतिक्षणभवत्प्रौढोक्तिभिः पुष्पिता-
श्चक्रे राजसभासु भासुरफलाः सद्भावतां माननैः ॥ २६ ॥

अथ क्रमेण निर्वाहयन्निजं कार्यं प्रकाशनेन काशीविद्यासुधानिधिपत्रे परिभाषेन्दुशेखरप्रत्यभिज्ञादर्शनादिदुरूहग्रन्थवास्तवार्थानां मुद्राक्षरैः सापत्रपाणि तन्वन्नपार्थपाठनकदर्थितविद्यार्थिसार्थानि दुर्वादिहृदयानि प्रमोदमेदुराणि च सम्पादयन् दर्शनरसिकमानसानि समूलकाषं कषंश्च

कलिकालप्रबलीभवद्बालविधवापुनर्विवाहवैधताप्रख्यापनदुराग्रहग्रहाविष्टान् मोहमयीनामकनगरवास्तव्यान् बोधलेशदुर्विधानपि निबन्धकरणोद्यतान् दुराशयान् निर्माय दोषाभासनिरासनामकं स्वकीयगुरुवरप्रणीतविधवोद्वाहशङ्कासमाधिनामकनिबन्धरत्नतिलकं गाढयुक्तिपरिपूरितं चिरमन्वभवदसावखण्डपाण्डित्यसाम्राज्यम् ॥

भूम्यां नास्ति पुरं तदस्य सुयशो नो यत्र चन्द्रायते
राजा साम्प्रतिको न को ऽपि स पदं मूर्ध्ना ऽस्य यो नार्चति ।
ईदृक् को ऽद्य बुधो न योस्य सशिरःकम्पं गुणान् श्लाघते
का विद्वत्परिषच्च सा ऽस्य वचसा या चित्रतां नर्च्छति ॥ २८ ॥

वृद्धानां समुपासने रघुपतिर्नीतौ च वाचस्पतिः
सद्धर्माचरणे च धर्मतनयः श्रीहर्ष एवोक्तिषु ।
त्यागे कर्णविवर्णतावहगुणो लक्ष्म्यां कुबेराधिको
नास्माभिः सदृशो ऽस्य को ऽपि विबुधो दृष्टः श्रुतो वा ऽधुना ॥ २९ ॥

इत्थमेष परिपूतचरित्रो
निर्वहन् भुवि निजागमकार्यम् ।
अत्यवाहयत कालमनल्पं
कल्पनानमितवादिसमाजः ॥ ३० ॥

शुश्राव तं तुहिनशैलतटान्तशोभि-
मण्डीपुरीपरिवृढः समितौ कदा चित् ।
सार्थाभिधो विजयसेनमहीमहेन्द्र
आचार्यकार्यकरणोचितवृत्तपूतम् ॥ ३१ ॥

प्रागागतो हरपुरे निजकारितायां
शौर्येनमर्दितविवादिगणं सभायाम् ।
हर्षप्रकर्षपरतन्त्रमनाः स नित्यं
भट्टारकः स्पृहयति स्म तदर्चनाय ॥ ३२ ॥

सम्प्रेष्य शीलनिलयं स्वपुरोहितं स
सप्रश्रयं स्वगुरुभिः सहितं बुधं तम् ।
आनाययन्निजपुरं पुरुहूतवीर्यः
शिष्यैर्द्विजैश्च सह वेदविशेषविज्ञैः ॥ ३३ ॥
तादृक् च पर्यचरदेनमसीमभक्तिः
शीलेन तत्परतया विनयेन वित्तैः ।
दुद्राव चन्द्रकिरणैरिव चन्द्रकान्तः
स्वान्तं नितान्तमृदु तस्य सदा यथान्तः ॥ ३४ ॥
उन्मस्तकैश्च कनकैर्जनकैः सुखानां
सन्तोष्य तद्गुरुमसौ शनकैर्जगाद ।
मन्त्रोपदेशविधये मयि सानुकम्पः
स्याद्येन भूमिधिषणोऽयमिदं यतेथाः ॥ ३५ ॥
श्रद्धातिरेकमवधार्य सगद्गदेन
वाक्येन तस्य करुणावरुणालयः सः ।
श्रीमद्गणेशमनुदानविधौ न्ययुङ्क्त
तं वेदवागधिकमानितनैजवाक्यम् ॥ ३६ ॥
कृत्वोपदेशविधिना स नृपं कृतार्थं
शुश्रूषितश्चिरतरं विनतेन तेन ।
सम्प्राप्तराङ्कववरांशुकभूरिवित्तै-
र्हृष्टैर्द्विजैः सह महेशपुरीमवाप ॥ ३७ ॥
अष्टाविंशसमासमाश्रितवयाः पूतं विधायेदृशं
वृत्तं शारदशीतदीधितियशा वित्तैर्द्विजान् मोदयन् ।
आतेने स विनायकाख्यमखिना सम्प्रार्थितः प्रश्रया-
दौद्गात्रं रचितेष्टकाग्निचयने ऽप्तोर्यामनाम्नि क्रतौ ॥ ३८ ॥

तेषां कायनिकायमुज्झति चिरान्नाद्यापि रोमाञ्चिता
तेषामक्षिपथे प्रमोदसलिलासारो न विश्राम्यति ।
चेतः किञ्च चमत्कृतेः परवशं कार्यान्तरं नेहते
यैर्येन ऽच सुधासमानमधुरं तत्सामगानं श्रुतम् ॥ ३९ ॥

अग्निष्टोममखे जनार्दनकृते चाध्वर्यवं निर्वहन्
प्राचीनाधुनिकान् बुधान् स विदधे चिचीयमाणांश्चिरम् ।
अन्यस्मिंश्च मखे स हौत्रमतुलं याज्याः पठन् नातनोत्
तेनासीत् प्रकटा चर्यानिपुणता तस्याखिले भूतले ॥ ४० ॥

गत्वा ऽथ दक्षिणदिशं गुरुभिः सहैव
संसेव्य तीर्थनिवहान् परिपूज्य देवान् ।
संतोष्य भूसुरवरान् विपुलैः स वित्तै-
स्त्रिंशत्तमामनुबभूव समां समानः ॥ ४१ ॥

कुर्वन्नसावितरमानुषदुष्कराणि
कार्याणि नित्यमिति भूतलभारतीशः ।
काश्चित्समाः सततपाठितसर्वशास्त्रो
निर्णीतधर्मविषयो गमयाम्बभूव ॥ ४२ ॥

मराडीपुरेन्द्रगुणसंहतिभिर्बलेन
सन्दान्यमानहृदयः स दयापयोधिः ।
वारान् बहून्नगरमस्य जगाम राज्ञ-
स्तेनापि शिष्यसहितो बहुशोऽर्चितोऽभूत् ॥ ४३ ॥

एवमयमतिवाहयन्ननेहसं कतिपयं पञ्चत्रिंशत्तमे हायने परित्यक्त-निखिलविषयवासनेषु सदाचारतुलितसलिलसम्भवासनेषु विहितपरःसहस्रशिष्यमतिविकासनेषु निजगुरुवरश्रीराजारामशास्त्रिषु ब्रह्मभूयमनुभवत्स्वनवशेषितावगन्तव्यविषयो ऽपि चिराभ्यस्तसन्तताचार्यपरिचर्याऽऽकस्मिकविच्छेदविरसाशयस्ततः प्रभृत्येव विहातुकामः पाठशालाऽध्यापनादिकार्यं

निवार्यमाणो निजजननीमुखनिखिलबन्धुवर्गेण सादरं सम्भावितो निजगुरुनिर्वाहितमनितरसुकरं धर्मशास्त्राध्यापनाधिकारं समर्थ्य काशिकराजकीयप्रधानपाठशालाप्रभुवरेण तदनुरोधादूरीकृतप्रशस्ततदादेशो दिशन् दुरूहधर्मसङ्कटेषु सोपपत्तिकं लेखचातुरीसमवधीरितगीर्वाणगुरुर्व्यवस्थापत्राणि निबध्नन्ननेकविधान् निबन्धान् परिशोधयन् काश्मीरमण्डलाखण्डलप्रार्थनया तदीयसभास्तारपण्डितनिर्मितं धर्मशास्त्रनवीनप्रबन्धरत्नं निरन्तरं नानादिगागतासङ्ख्यधर्मविषयविशयपत्रोत्तरत्रिलेखनव्यग्रतया विस्मृताहारविहारविश्रमो ऽप्यश्रमः प्रख्यापयन् निजमात्रविश्रान्तां पण्डितैकशेषतामवधार्य पाठशालीयनिजकार्यनिर्वहणक्षमान् निजान्तेवासिनो विज्ञाप्य तत्रत्यं प्रभुवरं पञ्चदशहायनमात्राधिकारसम्पादितपरःसहस्रवत्सरानश्वरविविधविज्ञो ऽनिच्छत्येव वियोगखेदजनितनयनाम्बुपूरपूरितमहीतले तत्र प्रभुवरे स्वीकृत्य तत्रत्यवार्षिकपरीक्षाव्यवस्थापनं विहायाऽऽसप्तचत्वारिंशे वत्सरे निजाधिकारं यतते स्म सुरनिकरं तर्पयितुं नव्यनव्यैर्हव्यैरसौ वसुमतीवसिष्ठः ॥

एकः सो ऽत्र पवित्रचित्रचरितः साङ्गत्रयीपारगः
श्रौतस्मार्तपथप्रवीणधिषणः षड्दर्शनीमार्मिकः ।
दृप्यद्दुष्टकलिद्विपाहतिदलद्विद्यालतैकाम्बुदः
पूज्यश्रीगुरुबालशास्त्रिविबुधः पुंरूपवाग्देवता ॥ ४४ ॥

शुश्रूषापरितोषिताद् गुरुकुलाद्येनाधिगत्य श्रुतीर्बाल्ये बालसरस्वतीपदभृता सर्वेऽपि विस्मापिताः ।
यः कृत्स्नद्रविणार्पणादपि गुरून् व्युत्पत्तिसंतोषितान्
सेवंसेवममन्यताद्भुतगुणो नानृण्यमप्यात्मनि ॥ ४५ ॥

यः स्वात्[१]युज्ज्वलसर्वतोमुखभृतान्तेवासिशुक्त्यावली-
निर्यन्निस्तु[२]लसूक्तिमौक्तिकसिते सार[३]स्वते स्रोतसि ।

१ स्वस्यात्युज्ज्वलेन सर्वतो मुखेन भृता अध्यापिता इति यावत् । तादृशा अन्तेवासिनः शिष्या एव स्वात्यां नक्षत्रविशेषउज्ज्वलेन सर्वतोमुखेन जलेन भृताः पूरिता इति श्लेषमूलकं समस्तवस्तुविषयं रूपकम् । २ वर्तुलमुपमाशून्यं च । ३ सरस्वतीसंबन्धिनि सागरसंबन्धिनि च ।

सद्यो रञ्जितरा[1]जहंसनिवहाहंपूर्विकाऽभ्यर्चित-
श्चित्रं कोऽपि विशा[2]रदो विजयते किं शा[3]रदो वारिदः ॥ ४६ ॥

अग्निष्टोममुखान्मखानविकलं निर्वोढुमातन्वते
यस्मिन् होतरि हर्षमापुरमरा मोहं मुहुः सामगे ।
मु[4]ख्याध्वर्यवभाजि विस्मृतचरान् भागान् भृशं लेभिरे
मन्ये यज्वनि तुन्दिलाः किमधुना मुञ्चन्ति नो यद्गृहम् ॥ ४७ ॥

ह्र[5]स्वामप्यनुयाति यस्य विजयः सेनां समित्संचये-
ल्लिम्पन् शीतगिरिं सितेन यशसा पिष्टं पिनष्टीव यः ।
सोऽयं खण्डितवैरिमण्डलधनुर्मण्डो[6]धराऽऽखण्डलो
धत्ते मूर्ध्नि सु[7]वर्णरत्नघटितां कोटीरवद् यद्गिरम् ॥ ४८ ॥

आचारव्यवहारसंशयभवत्कोलाहलव्याकुला
आसम्राजमकिञ्चनादि मनुजाः श्रद्धाय वेदेष्विव ।
विश्वस्य प्रियपथ्यकारिवचने विश्व[8]स्य यस्यादरा-
द्धर्माध्वन्यपराधलेशविधुरा विर्वर्तयन्ति क्रियाः ॥ ४९ ॥

वादे जल्पवितण्डयोः प्रतिसभं सोत्साहमागच्छता
वादिन्यङ्कुगणान् स्वयुक्तिनखरैर्विद्राविता्न् पश्यता ।
वैतानाग्निनिषेवणैकमतिना वेदान्तशान्तात्मना
येनामीष्वधुना समापितमभूच्छार्दूलविक्रीडितम्[9] ॥ ५० ॥

---

१ राजानो हंसाश्च त एव राजहंसाः । २ प्रवीणः शारदाविहीनोऽपीति विरोधाभासध्वनिः । ३ शरदि भवः सरस्वतीसंबन्धी च । अत्रोक्तरूपकमूलकोत्प्रेक्षाश्लेषयोरेकवाचकानुप्रवेशसंकरः । विरोधाभासस्तु व्यङ्ग्यः । वृत्त्यनुप्रासेन सह संसृष्टिरिति बोध्यम् । ४ प्रतिप्रस्थातृव्यावृत्त्यर्थम् । ५ अल्पीयसीमपि पृतनां युद्धे विजयोऽनुगच्छति । यत्सेनायाः सदा जय एवेत्यर्थः । संज्ञायां नाम्नि ह्रस्वां सेनां विजयः शब्दः अनुगच्छति । यन्नाम विजयसेन इति भावः । ६ धनुर्मण्डयति भूषयतीति सः । ( धनुरिति पृथक् पदं वा । ) ७ शोभनैर्वर्णैरूपै रत्नैः । कनके रत्नैर्हीरकादिभिर्घटितां वा । ८ विश्वासं कृत्वा । ९ शार्दूलस्येव विक्रीडितं पराक्रमः । एतदाख्यं वृत्तमुपक्रान्तं समापितमिति मुद्रालंकारश्च ।

अथ श्रौतानग्नीन् विधिवदयमाधाय सदने ।
हविर्भिः सन्तर्प्य त्रिदशनिवहं पर्वणि सदा ।
पिपासां सोमस्य प्रशमयितुमस्य व्यवसितो
बभूवाग्निष्टोमक्रतुवरविधानोत्सुकमनाः ॥ ५१ ॥

ततोऽयमधिगत्य श्रौतविधिषु देवयजनभूमिं राजयाचनीयां श्रीमतो बन्दीकृतारातिवृन्दाद् बुन्दीपुरपुरन्दरादासादितानुमतिरद्सीयामात्मसात्कृत्य भुवं परिहृत्य प्रतिनिधिभावभाञ्जि यज्ञोपकरणवस्तूनि सम्पादिताशेषयज्ञसम्भारोऽवधार्य माघ्यां पौर्णमास्यामग्नीषोमीययागकर्तव्यतामामन्त्रितविविधदेशवास्तव्यस्तव्यगुणभासुरभूसुरगणः प्रागेव दशभ्यो वासरेभ्योऽपूपुजद्ध्रुवम् ॥

तदानुभूतभूयिष्ठमखापि मखभूरियम् ।
सत्वरा चत्वरोत्सेधाद्धर्षोच्छू[1]नत्वमाप किम् ॥ ५२ ॥

गणनायकभूवराहकूर्मानथ शेषं सुगशिल्पिनं समर्च्य ।
गणनाय विहारमाशु कर्तुं न्यदिशच्छिल्पविशारदान् स यत्यन् ॥ ५३ ॥

ततः पश्चात्प्रा[2]ग्वंशं ततः पुरस्तात्स[3]दोहवि[4]र्धाने पार्श्वयोश्च मा[5]र्जालीयाग्नीध्री[6]ये पुरश्चोत्तरवे[7]दिं चात्वा[8]लोत्करौ[9] सदसि होत्रकधिष्ण्या[10]न्योदुम्बर्यव[11]टं हविर्धाने चोपर[12]वान्यथावन्निर्माप्य परिकल्प्य चानल्पसैान्दर्याणि तत्रतत्र द्वाराणि संसाध्य च शुभं मण्डपमभितो विधापितोचितोपवेशनस्थानः प्रतीक्षते स्म यज्ञारम्भमहोत्सवं स यज्वनामग्रणीः ॥

त्रयोदश्यां माघ्यामथ कृतगणाधीशनमनो
मनोभीष्टैः शिष्टैः सह विहितनान्दीमखविधिः ।

१ चत्वरस्य हर्षहेतुकपुष्टत्वोत्प्रेक्षा । २ प्राकृतिकाग्निस्थानम् । ३ होत्राद्युपवेशनस्थानम् । ४ सोत्याहनीयसोमाभिषवस्थानम् । ५ चमसशोधनस्थानम् । ६ आग्नीध्रस्थानम् । ७ प्रधानहोमस्थानम् । ८ यज्ञियमदाहरणगर्तः । ९ अपयुक्तपदार्थप्रक्षेपणार्थं गर्तः । १० होत्राद्यायस्यस्थण्डिलानि । ११ उद्गातृच्छायाभूतोदुम्बरशाखानिखननार्थं गर्तः । १२ गर्तचतुष्कमन्तर्मिश्रम् ।

कुशासीनः पत्न्या सह सकुशपाणिः कुशलधी-
रसावन्त्वेणिर्मखकरणसङ्कल्पमतनोत् ॥ ५४ ॥
लसद्रम्भास्तम्भा किसलयचलत्तोरणवृता
कृतानल्पाकल्पा श्रुतिशतकजल्पाकभरिता ।
यजुःसामर्ग्जन्यध्वनिभिरभिभूतान्यनिनदा
सदा तोषं केषामतुलमकरोन्नाध्वरमही ॥ ५५ ॥
ब्रह्मक्षत्रार्यसम्पूर्णा कीर्णा पुष्पफलैः कुशैः ।
यजुःसामर्ग्ध्वनिभृता त्रिव[१]र्णा भूस्त्रिधा बभौ ॥ ५६ ॥

द्वादशशतगवदक्षिण ऐन्द्राग्नाश्विनसमानतन्त्रपशुः ।
द्वादशशस्त्रस्तोत्रः प्रवर्ग्ययुक्तो रथन्तरेण युतः ॥ ५७ ॥
ज्योतिष्टोमः सोमो ऽग्निष्टोममखस्तदा ऽमुना ऽऽरब्धः ।
श्रीयज्ञपुरुषहर्षप्रकर्षमात्रं मनसिकृत्य ॥ ५८ ॥
अथ पायसौदननिवेदनपूर्वं कृतसोमराजनमनः स सुधीः ।
त्वरते स्म विस्मितजनेक्षितया द्विजपूजयर्त्विज इमान्वरितुम् ॥ ५९ ॥
सोमप्रवाकेण पुरा वृतानां होत्रादिकानामथ ऋत्विजां सः ।
समन्त्रकं प्रारभताध्वरीन्द्रो विद्वद्वराणां वरणं सुतूर्णम् ॥ ६० ॥
विद्वद्वन्दितबालदीक्षितसुतः सङ्ख्यावतां सम्मत-
स्तत्र द्वादशवार्षिकोऽपि वयसा तुल्यः सुराणां गुरोः ।
होता ऽऽहूतमहेन्द्रमुख्यदिविषत्सानन्दसंवीक्षितो
यज्ञे तत्र गदाधराभिधसुधीवर्यो वृतोभून्मुदा ॥ ६१ ॥

ततो जयरामशास्त्रिसदाशिवदीक्षितराजारामदीक्षिता मैत्रावरुणाच्छावाकग्रावस्तुद्भावेनाव्रियन्तामुना दीक्षिष्यमाणेन ॥

१ त्रिगुणाः रूपाणि अक्षराणि च ।

बाल्ये येरुपनीय वेदमखिलं श्रौतं तथाध्यापितो
यस्मात् प्राप वसिष्ठतुल्यचरिताद् आधानकाले ऽरणी ।
तान्नानाविधयज्ञधूर्वहतया विख्यातकीर्तिर्नसौ
मुख्याध्वर्यवमापयद् गुरुवरश्रीरामकृष्णाभिधान् ॥ ६२ ॥

ततस्तैत्तिरीयशाखाध्यापनधुरन्धरं श्रौतार्णवमन्थनैकमन्दरं सुत्वात्मजवेणीमाधवदीक्षितं प्रतिप्रस्थातृभावे नियुज्य पुरस्कृत्य च काशीनाथशर्माणं नेष्ट्रीये विहितसोमयागं सत्याषाढमतपारदृश्वानं जनार्दनशर्माणमुन्नेतृभावे प्रोत्साहयामास ॥

घृताप्तोर्यामादिक्रतुसकलनिर्वाहणधुरान्
जगन्मान्यान् धन्यान् विदितनिखिलन्यायविषयान् ।
सखारामाभिख्यान्निजगुरुवरज्येष्ठसहजान्
स वव्रे ब्रह्मत्वे विशदधिषणाह्रीणधिषणान् ॥ ६३ ॥

ततो नानाविधनिगमश्रौतस्मार्तशास्त्रप्रवीणं धुरीणमध्यापकानां राजारामशास्त्रिणमङ्गीकार्य ब्राह्मणाच्छंसित्वं त्रिविधश्रौतपथपारीणं काशीनाथशास्त्रिणं ग्राहयित्वाग्नीध्रीयं भट्टवंशावतंसं गोपालशर्माणं विदधे पोतारमसौ मध्यमलोकचतुराननः ॥

वाणीकरक्वणदनल्पगुणाढ्यवीणा-
संमूर्च्छनाविजयिसुन्दरसामगानम् ।
गोपालकृष्णविबुधं स्तुतिकार्यधुर्य-
मुद्गातृतामनयदेष विशेषवेदी ॥ ६४ ॥

प्रस्तोतृत्वे च प्रख्यातसामगानं बालदीक्षितं परिकल्प्य सम्प्राप्य च यज्ववररघुनाथदीक्षिते प्रातिहर्त्रं वरित्वा बाबूशर्माणं सुब्रह्मण्यं पुरश्चक्रे यज्ञकर्मसु बापूभट्टाभिधसदस्यं वुवूर्षुरसौ सौम्यमूर्तिः ॥

अथोपविष्टान् कुशविष्टरेषु शिष्टानधीष्टान् परमप्रहृष्टान् ।
पाद्यार्घ्यतोयाचमनीयपूर्वं समर्च्य यज्वा मधुपर्कदायी ॥ ६५ ॥

विशालकौशेयमवान्तरीयैर्महाघनै राङ्कववस्त्ररत्नैः ।
रत्नाङ्गुलीयैरपि रौप्यपात्रैरमोदयद्वेदविदां वरिष्ठः ॥ ६६ ॥

श्रोत्रैर्निपीतं रसनाग्रगीतं नीतं त्वचा चन्दनतां यशोऽस्य ।
मालीभवद् घ्राणसुखं किमक्ष्णोर्मुदेऽवहद्राजतपात्रशैलीम्॥६७॥

दर्शेदृशी मे हविषामलाभात्प्रतिक्रिया ऽस्या भवतां करस्था ।
ऋत्विग्वरान् वक्तुमितीव रक्तरत्नाङ्गुलीयत्वमवाप वन्हिः ॥६८॥

तदनु चमसाध्वर्यून् रश्मीनिवात्मन उद्गतान्
विदितयशसो धातारं च प्रसर्पकपुङ्गवान् ।
सुरभिसुमनोवस्त्रैः पात्रैर्गवार्पणपूर्वकं
मुदितमनसो यज्ञारम्भे व्यधात्स बुधाधिपः ॥ ६६ ॥

तदनु प्राग्वंशपश्चिमद्वारउपस्थाय देवता देवयजनं गत्वा सम्पाद्य विधिना प्राग्वंशेग्नीन्निर्दिदेश द्रव्याणि प्रतिपत्तये ॥

आज्यं पशुपुरोडाश्या यावता स्यान्मखो मम ।
तावद्यज्ञार्थमन्यत्तु भुञ्जीरन् ब्राह्मणा इति ॥ ७० ॥

प्रससार तदारभ्य तत्र खादतमोदता ।
द्विजानां कर्मठानां तु जज्ञे पचतभृज्जता ॥ ७१ ॥

अथारब्धे ऽध्वरवरे विधायाहवनीये कूष्माण्डहोममध्वर्युः सम्पादयिष्यन् प्रवर्ग्यसामग्रीमग्रेसरीकृत्य कृत्यविदामग्रणीरश्वमनुगतो ब्रह्मयजमानाभ्यामाहृत्य मृद्वराहविहतादीनि तान्यभिमन्त्र्य निष्पाद्य तैर्यथावन्महावीरान्प्रताप्य चामून् परिद्रढय्य हुत्वा सम्भारयजुर्भिः प्राक्रमत दीक्षणीयामिष्टिम् ॥

पूज्याः सर्वे कथमिव सुरा एकदादौ मखेस्मिन्
आलोच्येत्थं कृतपरिचयो बह्वृचब्राह्मणेषु[१] ।

---

१ अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा देवता इति तत्र श्रुतत्वादिति भावः ।

प्रत्याहाराकलनचतुरो दीक्षणीयेष्टिमध्ये
सो ऽग्नाविष्णू प्रथमचरमौ किं तदानीमयष्ट ॥ ७२ ॥

अथो विहितवापनस्त्रिपथगाजले निर्मले
यथाविधि कृताप्लवोऽप्यहतवाससा वेष्टितः ।
शचीसदृशशीलया सपदि तत्र पत्न्या युतो
मनोभिलषितान्धसा निजजनैरमोद्यादृतैः ॥ ७३ ॥

ततस्त्रिककुदञ्जनं नयनयोरसौ धारयन्
मृगाविकलचर्मणा वृततनुः शिरस्त्राणवान् ।
उदुम्बरभवं वहन् पृथुलदण्डमास्योन्मितं
तनुं मृगविषाणया स विलिखन्नभूद्दीक्षितः ॥ ७४ ॥

कलेस्त्रातुं वेदान् कमलभवलोकादुपगतो
वसिष्ठो ऽरुन्धत्या सह किमिति नातर्कि किल कैः ।
तदोपेतं पत्न्या शिरसि मृदुजालोल्लसितया
सदःस्थं पश्यद्भिर्व्रतकृतमतिं दीक्षितममुम् ॥ ७५ ॥

तस्मिन्नह्नि वनीपकामरतरोर्बुन्दीपुराधीशितुः
प्राप्याज्ञां नवनन्दशर्मविबुधा आचार्यलक्ष्माभिधाः ।
वर्षन्ति स्म तथाविधं वसु सनीहारा[1] विहाराद्बहि-
र्वैयर्थ्यं व्यपदिश्य येन गमने ऽजायन्त लालाटिकाः[2] ॥ ७६ ॥

इति प्रथमवासरे परिसमाप्य सर्वं विधिं
विसृज्य सकलर्त्विजो रजनिविश्रमायादरात् ।
वितीर्णवसुरप्यसावनिशबद्धमुष्टि[3]स्तदा
निशामनयदर्चयन् मनसि यज्ञनारायणम् ॥ ७७ ॥

१ यज्ञसंपादनोपयोगिधनाहरणार्थं नियुक्ताः । २ प्रभोर्भालदर्शनमात्रकार्याः द्रव्यस्य प्रभूतस्य प्राप्तत्वादिति भावः । ३ कदर्यः विधिबलान्मुष्टिबन्धनकर्तेति विरोधपरिहारः ।

तदनु परेद्युः प्रभातएव विहितनित्यक्रिये वैतानाग्नीन् ज्योतिष्मतः कर्तुमादिशत्यध्वर्यौ त्वरमाणे च याजकगणे प्रदक्षिणार्चिर्मिषेण पूर्वदिनहविरास्वादनसंजातहविरौत्सुक्ये प्रसार्य रसना याचमानइव हवींषि हुतवहे पूर्यमाणे च तेजोतिरेकनिष्पादितापरकृशानुशङ्कैरखिलागमपारगैर्द्विजोत्तमैर्यज्ञमण्डपे सज्जीक्रियमाणे च परिकर्मिभिस्तत्तत्प्रदेशेषु कुशसमिदादिसंभारे निजमातृवरिवस्यावलोकनायेव त्वरयति सारथिं कमलिनीनाथे ॥

म[1]न्दाक्रान्तामथ रविकरैर्यज्ञशालां विशालां
संप्रेक्ष्यासावदितिमयजत्प्रायणीयाभिधेष्ट्या ।
यस्यां धूम्याविश[2]यमदिशत्केवलच्छान्दसा[3]नां
द्रागायान्त्याः सुरमु[4]निपथात्केशपाशः श्लथो ऽस्याः ॥ ७८ ॥

सोमक्रयण्यामथ कल्पितायामेकाब्दशोणाकृतिपिङ्गलाक्ष्याम् ।
प्राप्यैष यज्वोत्तरवेदिदेशं प्रावर्तत क्रेतुमशेषसोमम् ॥ ७९ ॥

परिश्रितेन च्छदिषोपरिष्टाद्
वृतेन सार्द्धं शकटेन गच्छन् ।
सोमाभिमुख्यं विदधच्च तस्य
स्थिते तदा ब्रह्मणि दक्षिणस्याम् ॥ ८० ॥

आस्तीर्य च क्षौमवरं मृगाजिने सहेमहस्तेन ममे स सोमम् ।
यथाविधि स्वाचितमङ्गुलीभिस्ततो न्यबद्ध्नाद्वसनेन तेन ॥ ८१ ॥

गोहेमाजाधेनुवत्सवृषैरनडुहा ऽतनोत् ।
गोयुगेन च वस्त्रेण सोमक्रयमसौ कृती ॥ ८२ ॥

---

१ किं चिदाक्रान्ताम् । वृत्तनामोद्घाटनान्मुद्रालंकारश्च । २ धूमसमूहसंशयं । ३ न तु चतुराणां तेषां त्वदितिकेशपाशनिश्चय एवाभूदिति भावः । ४ तत्र कश्यपसन्निधानाददितेः सत्त्वादिति भावः ।

निर्दिश्य सोमक्रयणामथासौ ऋत्युक्तगन्धर्वमहत्तरेभ्यः ।
निष्कास्य सोमक्रयिणं स लोष्ट्रैर्न्यवेशयत्तं शकटे च सोमम् ॥ ८३ ॥

युक्ते वृषाभ्यां शकटे प्रयाति
सुब्रह्मणीयाभृति सामगे च ।
स्तुवत्यमुं होतरि मन्द्रमृग्भिः
शोभा गिरां पारमगात्तदानीम् ॥ ८४ ॥

अथाग्नीषोमीये ऽसितधवलवर्णे पशुवरे
प्रक्लृप्ते तं कर्णे दधद्घृतदण्डो व्रतिवरः ।
प्रतीत्त्यासौ सोमं कृतवृषवरोन्मोचनविधि-
स्तदानीमातिथ्यां व्यधित विमलामिष्टिमचिरात् ॥ ८५ ॥

अग्नीषोमातिथ्यमस्यां विधाय प्रोन्मुच्याथो धूर्वहं चोत्तरस्थम् ।
वारुण्यर्चा गन्धपुष्पोपहारैः सोमस्यार्चामेष यज्वा व्यधत्त॥८६॥
आप्यायनं निन्हवनं तदानीं राज्ञो विधायाखिलऋत्विजो ऽथ ।
मुदा बभुर्ब्रह्मपुरोगमास्ते ब्रह्मर्षयः शक्रमिवार्चयित्वा॥ ८७ ॥
अथ प्रवर्ग्यं विधिना विधातुं प्राग्वंशजद्वारगणं पिधाय ।
आच्छाद्य पत्नीं वसनेन तत्र प्रचक्रमे याजकवर्यसंघः ॥ ८८ ॥

पश्चाद्धोता ऽध्वर्युरासीत्पुरस्ता-
त्प्रस्तोता ऽभूदुद्गातृयाम्ये तदानीम् ।
आग्नीध्रोपाध्वर्युवर्यावुदीच्यां
ब्रह्मा यष्टा गार्हपत्यस्य याम्ये ॥ ८९ ॥

खरे महावीरममी विधाय जलं मदन्तीस्थमुपस्पृशन्तः ।
प्रपठ्य शान्तिं मधुरस्वरेण प्रवर्ग्यमारब्धुमथायतन्त ॥ ९० ॥

अग्नीध्रि रौहिणहविःकरणैकताने
प्रस्तोतरि प्रथितसुस्वरसामगाने ।

होतर्यभिष्टुवति घर्ममनेककार्य-
धीत्वाऽऽकुला: सदसि विप्रवरा बभूवु: ॥ ६१ ॥

सामाकर्णननिश्चला: कतिपये चित्रार्पितानां दशां
होतृस्तोत्रसुपूर्णकर्णविवरा अन्ये शिरोधूननम् ।
एणीचर्मधविचधुचितशुचीनध्वर्युमुख्यान् परे
दृष्ट्वा पूतमनस्कतामुपगता यज्वानमस्ताविषु: ॥ ६२ ॥

प्रा[1]ग्वंशे विशदे स्थितिं विदधतां शुद्धाशयानां तदा
प्राग्वंशे विशदे स्थितिर्बुधजनैर्निश्चीयते स्माद्भुतम् ।
प्रत्यक्षापि तदा ऽनुमामजनयत्सा येन तस्मिन् क्षणे
जिग्युस्तेन परान् विवादरसिकान् वैशेषिका:[2] साग्रहम् ॥ ६३ ॥

अथोपयमनीं स्रुचं विदधता करे ऽध्वर्युणा
हुते हविषि तत्क्षणं सरसितार्चिषा वन्हिना ।
स्वतृप्तिरुदिता ऽथ वा पुनरमुष्य याज्ञा कृते
त्यभून्न विदुषामपि प्रशमितो विवादस्तदा ॥ ६४ ॥

अथ विधाय समापनमस्य ते पठितशान्तिकृतेतरवाग्गणा: ।
उपसदिष्टिमनिष्टनिवारिणीं त्वरितकृत्यविधिं प्रवितेनिरे ॥ ६५ ॥

अध्वर्युहोतृक्रियमाणकार्यधारावगाहि श्रुतिनेत्रजातम् ।
सकृत्क्षणे ज्ञानयुगं तदानीं निर्दिश्य सांख्या अजयन् विपक्षान् ॥ ६६ ॥

व्याचष्टाऽग्नीद्दैवपत्नी: समस्ता: सुब्रम्हण्यश्चाव्हयामास शक्रम् ।
पौर्वाह्णिक्यौ ते समाप्यैवमिष्टी सद्यश्चक्रुस्ते दिनान्तोक्तरूपे ॥ ६७ ॥

प्रवर्ग्ये साधु विहिते तदा मखशिरश्चिरात् ।
अयुज्यत समर्थोभून्मखो येन फलार्पणे ॥ ६८ ॥

१ प्राक् वंशे इति पदद्वयम् । २ प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति वदन्त इति भाव: ।

श्रीमद्धरिश्चन्द्रमुखा दिने ऽस्मिन्महार्हवस्त्रादिबहूपहारैः ।
यज्ञेशशुश्रूषणकारिणः स्वमपावयन्नागरिका महेच्छाः ॥ ९९ ॥

द्वितीयदिवसे ऽखिलं परिसमाप्य चैवं विधिं
विसृज्य सकलर्त्विजो रजनिविश्रमायादरात् ।
वितीर्णविभवो ऽप्यसावनिशबद्धमुष्टिस्तदा
निशामनयदर्चयन् मनसि यज्ञनारायणम् ॥ १०० ॥

अथ तृतीयदिने स बुधाग्रणीः प्रमुदिताखिलऋत्विगुपक्रमम् ।
समतनोद्विधिबोधितकर्मणां कृतसमस्तविलोककशर्मणाम् ॥ १०१ ॥

तदनु यथाविधि विहितयोः पौर्वाह्णिक्योः प्रवर्ग्योपसदोर्यज्ञधूर्वहायमाप्यध्वर्युरग्रेण प्राग्वंशं यथोपदिष्टान् प्रक्रम्य प्रक्रमान् समपादयन् महावेदिमभ्यमन्त्रयच्चामूं यजमानः ॥ तदन्वापराह्णिक्यौ प्रवर्ग्योपसदौ समापयामासुरध्वर्युपुरोगमा ऋत्विजः सह यजमानेन ॥

तस्मिन्नह्नि कृताभिनन्द्यविनयो ऽमेठीपुराधीश्वरः
साष्टाङ्गं प्रणिपत्य यज्ञपुरुषं दत्वा ऽतुलां दक्षिणाम् ।
भक्त्युद्रेकभवत्प्रभूतपुलकः सानन्दबाष्पो मुहु-
श्चक्रे विस्मितमानसान् बुधजनान् श्रद्धामृतेनात्मना ॥ १०२ ॥

तृतीयदिवसे ऽखिलं परिसमाप्य चैवं विधिं
विसृज्य सकलर्त्विजो रजनिविश्रमायादरात् ।
वितीर्णविभवो ऽप्यसावनिशबद्धमुष्टिस्तदा
निशामनयदर्चयन् मनसि यज्ञनारायणम् ॥ १०३ ॥

अथ चतुर्थदिनारम्भे ससंरम्भमम्भसा विमलेन परिशोधिताखिलशरीरेष्वपि यज्ञवाटप्रवेशयोग्यतायां संदिहानेष्विव साशङ्कमितस्ततो ऽवलोकयत्सु प्रविशत्सु यज्ञमण्डपं परःसहस्रेषु प्रेक्षकेषु प्रभातप्रभृत्येव कथं चिदासादितप्रवेशनिर्गममार्गेषु त्वरमाणेषु याजकवरेषु संनिवेशयत्सु

च तत्तदवकाशेषु यज्ञपात्रबर्हिःसमिदादीनि परिकर्मिषु प्रावर्तन्त पौर्वा-ह्णिकप्रवर्ग्योपसदौ सद्य एव चापराह्णिक्यौ ते विधातुमध्वर्युमुखा मखधुरन्धराः ॥

उद्वासयिष्यन्नथ स प्रवर्ग्यमग्नीन्मुखानुत्तमदक्षिणाभिः ।
अजादिभिस्तोषयति स्म यज्वा स्वोत्साहसंधुक्षणदक्षिणाभिः ॥१०४॥

मुहुः प्रस्तोत्रोक्ते मधुरमधुरे सामनि मुदा
तदा वार्षाहारे विधुतशिरसस्ते दिविषदः ।
अतिष्ठाहोत्रीया यदजहुरथ स्वं स्वरविदं
तदा हाहाकारादनुगतपदार्थो ऽयमभवत् ॥ १०५ ॥

प्रवर्ग्यमुद्वास्य स विप्रवर्ग्यो गणस्तदैवोत्तरवेदिदेशे ।
त्वरायुतो ऽथोपसदा प्रचर्य कुशैर्महावेदिपिधानकारी ॥ १०६ ॥

कृत्वा हविर्धानविशेषकार्यं खात्वा तथैवोपरवानमुष्मिन् ।
आग्नीध्रधिष्ण्यादि विधाय तूर्णमौदुम्बरीगर्तमुखं ततान ॥ १०७ ॥

प्रणीय चैवोत्तरवेदिकाग्निं तथा हविर्धानमपि प्रणीय ।
सदोहविर्धानसमस्तमार्जालीयेषु निर्माप्य च शुद्धमण्डपान् ॥ १०८॥

सदसि होत्रकधिष्ण्यविधेः परं विरचितोत्करयोग्यविधिस्तदा ।
धृतपशुत्रययागविधित्वरो न हि तदा ऽऽलभत क्षणविश्रमम् ॥ १०९॥

ऐन्द्राग्नाश्विनपशुयुगसमानतन्त्रे तदारब्धे ।
अग्नीषोमीयपशौ तिलमात्रः सदसि नावकाशो ऽभूत् ॥ ११० ॥

तदनु यथाविधि निर्वृत्ते वैसर्जनहोमे ऽग्नीषोमप्रणयनोत्तरं विसृष्टायां चावान्तरदीक्षायां सत्वरं विधाय यूपसंमानादिपाशुकं कृत्यं व्यधात्पाशुकं मन्थनममन्थरमाविर्भावयिष्यन्नृत्विजां गण आशुशुक्षणिम् ॥

तदा किल पुरतो निरुद्धदृष्टिपथावकाशान्प्रागागतान् प्रेक्षकानपसारयतां कियच्चिरमवलोकयथ दूरादागतानामस्माकमपि नयनयोर्महो-

त्सवं संपादयितुं विधातुं चात्मानं पूततमं त्तणमन्तरदानाय प्रसीदतेति पाश्चात्त्यानां कथं वयममीभिरलसशिरोमणिभिर्बाध्यामहे चिरादागत्य सप्रार्थनमासादितावकाशाः पश्चादागतैर्यद्यमीषामीदृशी यागावलोकनश्रद्धा कथमिमे प्रागेव नोपयाता इति पुरःस्थितानां किं वृथा कलकलं तनुथ वाक्कलहकारिणां संमर्देन भवतां वयमपि कदर्थिता न पारयामो द्रष्टुमिति पार्श्वस्थानां जोषमाध्वं किं न पश्यथ राज्ञापि निर्दयसंमर्दितानलब्धावकाशान्विप्रकृष्टदेशावस्थितान् वाक्कलहेन भवतां विरच्यमानयज्ञक्रियान्तरायाः प्रेत्तन्ते सभ्रूभङ्गममी किलाध्वर्युमुखा इति व्यवस्थापकानां किमेवं भाषध्वे न कुप्येयुर्दयामयनिजाशयाः स्वतन्त्रप्रज्ञा न स्वलेयुरस्मत्संरावेण महाशयाः पश्यन्ति सकरुणमेव भवद्भिरभिभूयमानानस्मानिति दम्यमानानां च व्याप्नुवति रोदसीरन्ध्रं महति कोलाहले ॥

कृत्वोपाकरणाज्यसंस्कृतिमुखान् सर्वान् विधीनध्वरे
यन्मैत्रावरुणाय मन्द्रनिनदैरध्वर्युरादिष्टवान् ।
तेनैतत्क्षणएव मूर्छित इवालेख्यार्पितश्रीरिव
प्रायः सो ऽध्वरमण्डपोभवदलं क्षुब्धार्णवाभो ऽपि सन् ॥ १११ ॥

गभीरमधुरस्वरामथ पुरोनुवाक्यां मुदा
प्रशास्तरि पठत्यलं त्वरितवाहनान्वेषिणाम् ।
मखो हरिसभासदां कलकलेन वा पूरितः
प्रशास्तृनिनदेन वेत्युदभवन्नृणां संशयः ॥ ११२ ॥

किं मैत्रावरुणेन मन्द्रमधुरव्याहारिणा ऽऽकर्षितः
किं होतृत्तमयाज्यया निजबलाद् वृन्दारकाणां गणः ।
किं वाध्वर्युवषट्क्रियाश्रुतिभवत्संरम्भपूर्णस्तदे-
त्येवं भूरिविवादसान्द्रसदसा नानन्दि कस्को जनः ॥ ११३ ॥

यथा अथ नृपार्चितो हुतवहे हुता मन्त्रविन्
निरीक्ष्य न ममौ मुदा वपुषि यज्वनामग्रणीः ।
प्रमोदनयनाम्बुभिर्निबिडपूरितोरस्थलः
सुतृप्तविबुधार्पितां दधदिवैष पुष्पाञ्जलिम् ॥ ११४ ॥

सामोदं करतालिकाः कतिपये तस्मिन्क्षणे ऽवादयन्
नृत्यन्ति स्म मुदा विसंष्ठुलपदं के चित्तदा संसदि ।
इन्द्राग्न्यश्विमुखान्मखे ऽत्र सुहितानस्ताविषुश्चापरे
नानाभावविभाविता इति जना उच्चावचं चक्रिरे ॥ ११५ ॥

तूर्याडम्बरशम्बराम्बरचलद्वीवीणावृन्दाकुलः
काष्ठातीतनिनादकारिनलिकाध्वानैर्निरुन्धन् श्रुतीः ।
संप्राप्तातुलदक्षिणद्विजवराशीर्वादसंनादितो
ऽजैषीद्यज्वरः स धर्मजकृतं तं राजसूयाध्वरम् ॥ ११६ ॥

गाम्भीर्येण पयोनिधिं सुरतरून् दानेन मत्या गुरुं
नीत्या शुक्रमनुत्तमेन यशसा शीतद्युतिं शारदम् ।
यो धर्मेण युधिष्ठिरं विजयते यस्य प्रसादादभूद्
विद्वद्वृन्दनिकेतनेषु सततं सा चञ्चला ऽचञ्चला ॥ ११७ ॥

भूमीमण्डलमण्डनायितयशा मण्डीपुराखण्डलः
सर्वस्वार्पणतुष्टमद्गुरुकृपापीयूषधाराधरः ।
सो ऽयं शोभननामकं द्विजवरं संप्रेष्य तस्मिन्दिने
सर्वानभ्यभवन्निजैर्वितरणैर्यज्ञेश्वरप्रीतिकृत् ॥ ११८ ॥

पितापुत्रीयायामथ मधुरकण्ठं गिरि तदा
स सुब्रह्मण्यायां सविधि विहितायां मखिवरः ।

शतेषु च्छागेषु प्रतिपशु पुरोडाशहवनं
विधातुं प्रारब्ध त्रिदशगणसंतोषफलकम् ॥ ११६ ॥
तदैव वसतीवरीरप उपाहरन् सत्वरा
द्विजाः सुरनदीतटात् स्फुटतरातपच्छायतः ।
समन्त्रकमसादयन् द्रुतममूश्च शालामुखा-
नलापरदिशि क्षमाः परदिनीयसुत्याविधौ ॥ १२० ॥
अस्तशैलशिखरं गते रवावङ्गयागविधिरुत्तमो ऽभवत् ।
स्विष्टकृत्प्रमुखकृत्यसंभृतो मोददः सकलनाकिसन्ततेः ॥ १२१ ॥
विधाप्य वसतीवरीपरिहृतिं चतुर्थे दिने
विभूष्य सकलर्त्विजो ऽध्युषितशोभनाग्नीध्रकान् ।
प्रजागरकृते वधूं विधिबलादमूं बोधयन्
असाववसदादरात्सततसोमगोपायिता ॥ १२२ ॥

अथ पञ्चमेऽन्हि स्तोकविश्रान्तेषु श्रान्तेष्वपि सौत्यदिनसंप्राप्तिजप्रहर्षपरिपूर्णस्वान्तेषु चिरविश्रान्तेष्विव त्वरमाणेषु याजकेषु रात्रितृतीयभागारम्भएव निर्मलं गाङ्गमम्भोवगाह्य संनद्धेषु बहुपरिकरेणाशीतिवार्षिकेणापि यूनो ऽपि वैलक्ष्यलक्षीकृतान्विदधता ऽध्वर्युणा हुतास्वाग्नीध्रीये यज्ञतनुषु प्राक्रामयत् सवनीयस्य पशोस्तन्त्रं सर्वतन्त्रस्वतन्त्रो ऽसौ मन्त्रविदामग्रणीः ॥

उपांशुपात्रप्रमुखानि तत्र प्रयुज्य पात्राणि खरे ऽखिलानि ।
यथावकाशं चमसान् परिप्लवां न्यवेशयच्चाधवनीयपात्रम् ॥ १२३ ॥
पुरोधुरं पूतभृतं निवेश्य स्थालीस्ततश्चैकधनाः स्रुचो ऽथ ।
कृत्वोपरे ग्राववरांश्च संमुखान् राजानमासादयदेषु यज्वा ॥ १२३ ॥
सविश्वरूपाभिधसामगानउपाकृते प्रातरथानुवाके ।
मुदा तदा निर्वपति स्म सम्यगध्वर्युवर्यः सवनीयमाशु ॥ १२५ ॥

धानाः करम्भान् यवजान् विधाय व्रीहीनगृह्णात्परिवापहेतोः ।
ततः पुरोडाशनिमित्तमेतानामिक्ष्यमेकीकृतवान् पयो ऽथ ॥ १२६ ॥

अथैकधनाद्याहरणे जाते प्रचारे च दधिग्रहस्यांशवदाभ्ययोश्चोपांशुप्रचारे च निष्पन्ने सोमस्य राज्ञो महाभिषवे ऽन्तर्यामप्रचारोत्तरं गृहीतेषु विधिना ग्रहेषु गीते च सुस्वरमास्तावे बहिष्पवमानउद्गात्रा व्याघारितेषु धिष्ण्येष्वभूदाश्विनग्रहणम् ॥

ग्रहेषु सज्जेषु ततो ऽखिलेषु प्रावर्तताग्नेयपशोः स यागः ।
अध्वर्युमैत्रावरुणावथाग्नीद्धोता च चक्रुः किल यत्र कार्यम् ॥ १२७ ॥

अथ हुतायामाग्नेयपशुवपायां निर्वर्तिते च ग्रहावकाशोपस्थाने सवनीयप्रचारद्विदेवत्यप्रचारशुक्रामन्थिप्रचारेषु निष्पादिते च भक्ते विरचितसकलसामाजिकसाधुवादे चाच्छावाकवादे ऋतुग्रहप्रचारोत्तरभाविन्यैन्द्राग्नग्रहणे कृतउदीरिते च मन्द्रमाज्यशस्त्रे होत्रा वैश्वदेवग्रहणसमनन्तरं मधुरतरं गीते चोद्गात्रा ऽऽज्यस्तोत्रे होत्रा च प्रउगशस्त्रे निगदितेषु मैत्रावरुणप्रभृतिभिरुक्थ्यपर्यायेषु निष्ठामटीकत सवनाहुत्यन्तशेषकर्मपरिशोभितं प्रातःसवनम् ॥

शस्त्रस्तोत्रप्रचुरनिनदो देवतामोदहेतु-
स्तत्र प्रातःसवनविहितः सो ऽभवत्सोमहोमः ।
यस्मिन्नृत्त्वां शतकदशकं बिभ्रदेको महेन्द्र-
श्चित्रं नानाविधविधिभवाश्चर्यसाक्षी बभूव ॥ १२८ ॥

औदुम्बरीतलनिषण्णकुशाप्रसारि-
प्रस्तोतृसाममधुरस्वरजाततोषाः ।
उद्गातृगीतिकृतकर्णसुखाः सभास्था
नैव प्रयातमविदन् क्षणवद्दिनं तत् ॥ १२९ ॥

होतुः शस्त्रं प्रथममभवत्स्तोत्रपूर्वं प्रशास्तु-
स्तस्मादग्रे प्रथमसवने ब्राह्मणाच्छंसिनो ऽथ ।

अच्छावाकस्य च परमतः शस्त्रमाश्चर्यरूपं
चैवं माध्यंदिनसवनगा स्तोत्रशस्त्रालिरासीत् ॥ १३० ॥

समाप्यासौ प्रातःसवनमिति शक्रादिविबुधान्
हविःसोमैस्तृप्तान् पुनरपि हविर्भिर्मदयितुम् ।
अथारेभे माध्यंदिनसवनमाश्चर्यचरितो
विदित्वा गीर्वाणान् कृतपशुपुरोडाशमनसः ॥ १३१ ॥

अथ प्रतायमाने ऽभिषवादिमाध्यंदिनसवने स्तूयमाने सुस्वरं ग्रावस्तुता राजनि कृते ग्रहग्रहणे ग्रहावकाशोपस्थानात् परं सदसि गीयमाने च माध्यंदिनपवमाने धिष्ण्यव्याघारणे विहिते संपादिते च दधिघर्मे सवनीययागशुक्रामन्थिष्वनुष्ठितेषु ॥

चतुष्पदगवीर्मखे प्रददुरेव याज्याः पुरा
कथं रजतधेनवः कुशकृते प्रदेया इह ।
इति श्रुतिविचक्षणः समवधार्य तस्मिन् मखे
ददौ सुरतरूपमः सदसि गास्तदा ऽष्टापदीः ॥ १३२ ॥

मदीयतातं ज्वलनं हविर्भिः पुष्णाद्विरस्म्यद्य कृतोपकारम् ।
इत्थं विचिन्त्येव सुवर्णमृत्विक्करेषु गोरूपधरं तदा ऽभात्॥१३३॥

तदैव चमसाध्वर्युप्रसर्पकमुखान् द्विजान् ।
विपुलाभिर्दक्षिणाभिः स यष्टा समतोषयत् ॥ १३४ ॥

तदा स्वयमुपागतः किमु शतक्रतुः सादरं
दिदृक्षुरमुमध्वरं जनमितीव विस्मापयन् ।
समेत्य युवकाशिकापुरवरेश्वरः श्रद्धया
समर्प्य विपुलं वसु व्यधित भूषितं तत्सदः ॥ १३५ ॥

सोमेनापहृतानि किं सुतधिया चेतांसि तद्वीक्षिणां
किं वा मोदसुधासमुद्रलहरीमग्नानि निर्यान्ति नो ।
किं सामश्रुतिमूर्च्छितानि यदमी प्राप्ताः कृतोर्मण्डपं
निश्चेष्टा निरगुः समस्तदिवसं नेतः सभायां स्थिताः ॥ १३६ ॥

तदनु कृते मरुत्वतीयप्रचारे तृतीयमरुत्वयीयग्रहणे च मरुत्वतीयशस्त्रमुद्गिरति होतरि माहेन्द्रग्रहणे च नन्दयति महेन्द्रं पृष्ठस्तोत्रेषु प्रगीयमाने चोद्गात्रा परितोषितसकलसभास्तारान्तरे रथन्तरे निगदति निष्केवल्यशस्त्रं होतरि विरचिते माहेन्द्रेण सहातिग्राह्यप्रचारे वामदेव्यस्तोत्रपूर्वकमुक्थ्यपर्यायेषु प्रशास्त्रोदीरिते शस्त्रे नौधसस्तुतिपूर्वके ब्राह्मणाच्छंसिना कालेयस्तोत्रपूर्वकमच्छावाकेन समाप्यत माध्यंदिनं सवनाहुत्यन्तशेषकर्मालंकृतं सवनम् ॥

माध्यंदिनं सवनमित्थमसौ समाप्य
सद्यस्तृतीयसवनोत्सुकमानसोऽभूत् ।
श्रद्धावतां सततवैधविधौ रतानां
किं श्रान्तिराश्रयति चित्तशरीरवाचः ॥ १३७ ॥

अथ तृतीयसवनारम्भे ससंरम्भमनुष्ठितेष्वादित्यग्रहग्रहणयागमहाभिषवेषु गृहीतेषु ग्रहेषु जाते चाशिरावनयने ग्रहावकाशोपस्थानादुत्तरं सदसि गीयमानआर्भवपवमानेऽङ्गयागसवनीयप्रचारप्रस्थितप्रचारेषु कृतेषु विधीयमाने पिण्डदाने सावित्रग्रहणप्रचारयोरुत्तरं वैश्वदेवग्रहे गृहीते तारमुदीरयति वैश्वदेवशस्त्रं होतरि सघृतसौम्ययागमनुव्याघारितेषु धिष्ण्येषु पात्नीवतग्रहणप्रचारयोः परस्तादुद्गात्रा गीयमाने यज्ञायज्ञियाख्येऽग्निष्टोमसाम्नि होतर्यानन्दयत्याग्निमारुतशस्त्रेण विरचितसितोष्णीषानृत्विजः प्रतिधिष्ण्यं प्रज्वलितानग्नीन् सामाजिकांश्च ध्रुवावनयने कृते चमसप्रचारसमनन्तरमनुष्ठितेष्वनूयाजादिषु हारियोजनग्रहणप्रचारशोभितमवासासीद्यज्ञपुच्छादिसवनाहुत्यन्तशेषकर्मसमलंकृतं तृतीयसवनम् ॥

तुष्यद्धोतृकसप्रकोक्तविलसत्प्रस्थानयाज्याभृतं
माद्यच्छक्रमुखाखिलादितिसुतस्तोत्राग्र्यशस्त्रावृतम् ।
दीप्यज्ज्वालहुताशभासितदिशं तं पश्यतां मण्डपं
सभ्यानां विधिसंसदीव परमो मोदस्तदानीमभूत् ॥ १३८ ॥

ऐकान्यिकत्वमपि यन्न बभूव होतुः
शस्त्रं तदा निगदतो निशि वैश्वदेवम् ।
तेनास्य चित्रचरितस्य जनातियायि
शीलं बभूव भृशनन्दितविश्वदेवम् ॥ १३९ ॥

आग्निमारुतमथान्तिमशस्त्रं वर्जितस्खलितमेष उदीर्य ।
साधुवादविवशाद्यजमानात् प्राप कण्ठगतमौक्तिकहारम्॥१४०॥

अस्माकमस्त्यग्निरसौ पुरस्तान्मरुत्किमायास्यति वा न वाऽद्य ।
परीक्षितुं किं विति शुक्रवस्तैः शिरः प्यधाद्याजकयाज्यवर्गः॥१४१॥

पश्वङ्गयागरुचिरं कृतसोमयागं
धानाकरम्भसुरसाज्यहविःप्रपूर्णम् ।
जज्ञे तृतीयसवनं सुरभूसुराणां
सौहित्यकारि विधिदूषणलेशशून्यम् ॥ १४२ ॥

यो यज्ञान्तरदुर्लभैर्निजगुणैस्त्यागैश्च भक्त्या कृतै-
र्युक्तो दूषणलेशशून्यनिखिलानुष्ठानशस्त्रस्तुतिः ।
प्रायश्चित्तविशोधनाय विदधे तस्मिन् स सुत्वा मखे
प्रायश्चित्तघृताहुतीः प्रमुदितः शेषं च कृत्यं निजम् ॥ १४३ ॥

स पञ्चमदिने ऽखिलं परिसमाप्य चैवं विधिं
विसृज्य सकलर्त्विजो विधिविसृष्टसख्यान्मुदा ।
कृताखिलविधिक्रमः प्रमुदितैर्बुधैर्वन्दितो
मखाम्बुनिधिपारगः प्रणमति स्म यज्ञेश्वरम् ॥ १४४ ॥

अथ चिरातीते ऽपि यागे प्रतिक्षणतत्स्मरणसमुद्भूतप्रभूतरोमाञ्च-कञ्चुकितैरासादितामन्दानन्दैरपि कण्टकावृतैरिव निरन्तरनिर्यन्नयनाम्बु-पूरतया संपादयिष्यद्भिरिव चिरपरिश्रान्तस्य तस्य यज्वनो निकटएवाव-भृथोचितं तोयपूरमध्वरवरावलोकनौत्सुक्यनिर्निमेषेक्षणतया हविःसुहित-सोमरसास्वादनजनितमदाक्रान्तनिद्रालुनिर्जरन्यासीकृतामिवास्वप्नतां वह-द्भिरवभृथावगाहनोत्कैर्मानसारधनैर्महाजनैः परिवृतो निष्पीडनसंजातग्ला-नितया स्पन्दितुमक्षममिव नीरसविधदेशप्राप्तयइव स्वयमपि नीरसवि-धतां दधानमुपवेश्य सम्राडासन्द्यां राजानं गायद्भिः सुस्वरं सामानि सामगैः स्तोष्यद्भिः स्तुवद्भिः स्तुतवद्भिश्च होत्रकैर्विविधयज्ञायुधधरैरध्व-र्युपुरोगमैश्च संगृहीतावभृथीयेष्ट्युपकरणैः प्रयताचरणैः परिशुद्धान्तःकरणैः सर्वतो निरुद्ध्यमानगमनमार्गः परिकर्मिभिः सोमपानमत्तप्रसुप्तगीर्वाणगण-बोधनायेव तन्निनीष्वावपवाह्मनिवहाव्हानायेव दिवमाक्रामता भेरीनिस्सा-णतूर्यप्रमुखवादित्रनिनदेन विदार्यैव रसातलं संपिपादयिषुर्यज्ञशरणधारण-वेतनं शेषप्रभृतिभुजङ्गपुङ्गवानां विनिर्गत्य प्रदक्षिणक्रमेण क्रतुस्थानादवि-रलपौरकरयुगलपतत्पुष्पवृष्टिरचितमृदुलास्तरसंचरणेन तिरोभावयन् भूग-मनक्लेशमानुयात्रिकाणामन्तरान्तरा सामगानकृतसमस्तजनसंवननो ध्रिय-माणातपत्रतया पवित्रतममात्मानं पादैरस्प्रष्टुकामेनैव दिनकरेण परिहृता-वकाशो यशोनिशाकरप्रकाशशमिततापातिरेकतया निमित्तमात्रतामातन्वन् हेमन्तस्य रविमन्दीकृतौ प्रतिपदं प्रणमद्भिर्बिभ्रद्भिश्चरणाङ्कितमहीपरागं सानुरागं शिरस्सु भक्तिभरितैः सुचरितैरनुगम्यमानः संप्राप्य त्रिलोकीतीर्थ-मौलिललामभूतां सकलसुरासुरमुनिनिषेवितसलिलां भगवत्या भागीरथ्या विभूषितां मणिकर्णिकामारभतावभृथीयामिष्टिम् ॥

श्रद्धाऽनुद्धतबुद्धिभिः परिवृतः पौरैर्विशुद्धाशयैः
संरुद्धप्रसरः स यज्ववृषभः संघीभवद्भिश्च तैः ।
इष्टिं शिष्टवरिष्ठदृष्टचरितो हृष्टैः सुरैर्नन्दितां
तस्मिन् तीर्थवरे पुरारिमतनोत्संप्रीणयिष्यंश्चिरम् ॥ १४५ ॥

धृतावतारः किमु काशिकापतिः किमेष यज्ञेश्वर एव साक्षात् ।
जनैरिति स्वीकृतचित्ततर्कैर्मुहुः प्रहर्षादभिवीक्ष्यमाणः ॥ १४६ ॥

निवारिताशेषनृपालवेषस्तरिं समारुह्य मयूरचिन्हाम् ।
भक्तिप्रकर्षानतकाय ईश्वरीप्रसादनारायणसिंहभूपतिः ॥ १४७ ॥

सिष्णासुरेत्यावभृथे तदानीं प्रणम्य जज्वानममुं सहर्षम् ।
जनान् समेतान् मणिकर्णिकायां श्रद्धाम्बुधौ मज्जयति स्म चित्तम् ॥१४८॥

विहितावभृथेष्टिना ऽमुना नृपपौरौघनिरन्तरे तदा ।
जनिताखिलदोषशोधनं शुचि सस्ने मणिकर्णिकाजले ॥ १४९ ॥

प्रागेवाखिलतीर्थमौलिमणितां प्राप्ता शिवानुग्रहा-
दद्यासौ मणिकर्णिका ऽवभृथजामासाद्य शुद्धिं पराम् ।
दोषान् मानसकायिकोक्तिजनितान्निर्मूलयेत्सत्यमि-
त्यस्त्रासीद्धृतनिश्चयो ऽखिलजनो जज्ञे च शुद्धः क्षणात् ॥ १५० ॥

उद्भूता जलबिन्दवो ऽत्र शिरसा यैः सादरं धारिता-
स्तेभ्यः स्वाधिककालजं शुभफलं दातुं दरिद्रो विधिः ।
किं वा दास्यति यज्वने ऽधिकफलं श्रुत्वेति गौया वचो
नूनं मुक्तिमवेत्य सर्वसुलभामीशो ऽपि मूको ऽभवत् ॥ १५१ ॥

अथासौ चिरमवगाह्य सप्रमोदं जान्हवीजलमापाद्य च कृतकृत्यतां कृत्स्नजनस्य तूर्णमुत्तीर्णो ऽहते वाससी परिधाय पुरोधायाध्वर्युमुखाननुगम्यमानः पथ्या प्रतिपदं प्रणमद्भिः संजिघृक्षद्भिश्च चरणोदकं बहुभिरास्तिकजनैः क्रियमाणविलम्बो ऽपि जनयन् शुभाशीर्वादकुशलप्रश्नादिना तेषामुन्मस्तकं प्रमोदमासाद्य यज्ञवाटं प्रविश्य प्राग्वंशं संतर्प्य चोदयनीयायामिष्टौ देवताः परितर्प्य मित्रावरुणावामिक्षया समालभ्य भृशपरिश्रान्तानृत्विजो विधाय पूर्णाहुतिमुदवसानीयेष्टिस्थाने प्रदक्षिणीकृत्य प्रदक्षिणार्चिषो हुतवहानासादितस्वनिकेतन आधाय विधिना ऽग्नीन् कृत्वा च सायं होममभूत्सर्वतः कृतकृत्यः ॥

धन्या सा जननी शचीव जलधेर्यस्या अभूत्प्रागसौ
श्रौतस्मार्तसमस्तदर्शनविदा या वन्दिता चामुना ।
धन्येयं नगरी वसिष्ठमिव यं देधे ऽधुनैषा ऽऽत्मना
धन्याश्चापि वयं यदङ्घ्रियुगले मूर्ध्ना नमामो मुहुः ॥ १५२ ॥

कृत्वा शक्रमुखान् सुरान् स सुहितान् दत्वा ऽतुला दक्षिणा-
श्चक्रे ब्राह्मणतर्पणं चिरतरं नानाविधेनान्धसा ।
यस्मिन् षड्रसशालिभक्तरुचिरापूपादिसंतर्पिता
मन्यन्ते स्म महीसुरा दिविषदः किं चिद्भुविर्वञ्चितान् ॥ १५३ ॥

कस्को नाजनि भूसुरो ऽत्र सुहितः को नाप वा दक्षिणाः
का वीथी जनिता सिता न यशसा के श्रोत्रिया नार्चिताः ।
के ऽन्तर्वाणिवराः सभासु महतीं नापुः सपर्यां ततः
को वा विस्मयपूरमग्नहृदयो नास्मिन्मखे ऽजायत ॥ १५४ ॥

इष्टिं विधायेत्थमसौ प्रहृष्टः पूर्तैरलंकर्तुममुष्य भूमिम् ।
तूर्णं समाज्ञापयति स्म कारौन् निर्मातुमाराममिहाभिरामम् ॥ १५५ ॥

घनं कदलिकावनं तदनु तत्र जज्ञे ऽचिरात्
प्रफुल्लनवमल्लिकाप्रमुखवृक्षषण्डान्वितम् ।
यदीयसुमपूरितं स्थलमवेक्ष्य नूनं जनाः
पुरा सुरकरोज्झिते सुमगणे न संशेरते ॥ १५६ ॥

अथाशु मल्लीकरवीरबिल्वधात्रीमुखानोकहशोभमानम् ।
स्थलं ससंरम्भविजृम्भमाणरम्भाशतस्तम्भभृतं बभौ तत् ॥ १५७ ॥

संप्राप्तमानन्दवनेक्षणार्थं मन्दादरं नाकगतौ पुनः किम् ।
भूनन्दनं स्थानमिदं यतो ऽत्र संदृश्यते भूसुरवृन्दमेव ॥ १५८ ॥

किं वञ्चितं विष्णुपदाभिधानादानन्दनं नन्दनमीक्षणानाम् ।
यत्रास्य विष्णोः पदमेतदाप्य प्रतिष्ठितं वीक्ष्य जहर्ष लोकः ॥ १५९ ॥

ततो दृढं कारयति स्म तत्रोपलैर्विशालैः कृतबन्धमन्धुम् ।
माधुर्यनैर्मल्यतुषारताभिर्यदम्बु गङ्गाम्बुवतिसंदधाति ॥ १६० ॥

अत्रान्तरे हिमगिरेः समुपागतेन
मण्डीपुरेश्वरनिदेशवशंवदेन ।
दूतेन तन्नगरयानकृते ऽर्थ्यमानो
यातुं स निश्चितमनाः सुधियां वरिष्ठः ॥ १६१ ॥

गोष्ठीनजालवनपत्तनपार्थिवश्री-
गोविन्दरावनृपसोमपुरोहितेन ।
सप्रश्रयं प्रणमता वदता निजाङ्घ्रि-
पूजोत्सुकं नृपममुं परिचर्यमाणः ॥ १६२ ॥

प्राप्य प्रयागमवगाह्य सिताऽसितान्तः
संतर्प्य देवपितृपूर्वमनेकविप्रान् ।
भूपेन नम्रशिरसा विनतेन तेन
निन्ये निजं गृहमनेकविधोपचारैः ॥ १६३ ॥

भूपो ऽथ तं विदधतं स्वगृहं सुपूतं
शीलेन शीतकरशीतलकोमलेन ।
चक्रे पयोनिधिगभीरमपि क्षणेन
मोदाऽमृतामलचलल्लहरीपरीतम् ॥ १६४ ॥

स्वीकृत्य तस्य स नमस्यगुणः सपर्यां
पर्यायभाषिबुधमण्डलमण्डितायाम् ।

भूपस्य संसदि मनांसि नृणां समस्त-
शास्त्राविरोधमुपपाद्य चिरादताप्सीत् ॥ १६५ ॥

हुंकारमात्रपरिभूतविवादिवर्गः
संप्रार्थितो नृपवरेण पदानतेन ।
शैवीं विधाय दुरितक्षयदक्षदीक्षां
तस्मै स पार्थिवशिवार्चनमादिदेश ॥ १६६ ॥

मुक्तः कथं चिदमुना विरहासहेन
मण्डीपुरेन्द्रमवलोक्य नितान्तभक्तम् ।
प्रासादनिर्मितिभृशोत्सुकमानसो ऽथ
तूर्णं व्यभूषयदसौ निजयज्ञशालाम् ॥ १६७ ॥

उत्सृज्य तत्रान्धुमशेषभूततृप्त्यै स सुत्वा सुरसद्म कर्तुम् ।
जातत्वरः प्रेरयति स्म शिल्पपारीणबुद्धीनथ तत्र कारीन् ॥ १६८ ॥

अथ निरूप्य शुभं मुहूर्तं निर्वर्तिते शिलान्यासे स्थूलस्थूलोपलशकलचक्रवालभिद्यमानरसातलविवरनिःसरत्फणाभृत्फूत्कारमनुकुर्वति पर्वताहृतप्रचुरप्रस्तरसमीकरणचटत्कारे विवदमानेषु स्वस्वशिल्पनैपुण्यवर्णनपुरःसरं विविधवास्तुनिर्माणविषये कारिवरेषु सम्भाव्येव चिरमात्मानं प्रतार्य मलयेन पर्वतवर्ती दिशमाश्रितं भगवन्तं कुम्भसंभवं दिदृक्षुतया पुनः काशिकां समागतं सहैव धर्मपत्न्या लोपामुद्रया यायजूकममुं प्रसादयितुमिव संनिदधतं विन्ध्यपर्वतं संशाययत्यतिशयितोदयग्रावराशौ मसृणीकरणगुणप्रतिबिम्बिता इवोद्यानमध्योद्यत्फलपल्लवतल्लजवेल्लिता वल्लीः समुत्कीर्णाः प्रकाशयद्भिराकल्पमनल्पां जल्पाकजनजेगीयमानामसमानाममुष्य कीर्तिमम्बरपथातिथीभवन्तीमुत्तम्भयितुमिव धृतविग्रहैः स्तम्भैः शिवपरिचर्यागतरजताचलविमलाधित्यकाविशयसंपादनालंकर्मीणैः कुड्यैश्च समलंकृतं विस्तृतवितर्दिकासनाथसर्वतोभागतया ऽभितो निषण्णपान्थजन-

वर्ण्यमानरामणीयकं यज्ञमिव विततप्र[1]स्तरवेदिकं प्रतिप्रवृत्तक्षोणीपतिसमागममिव संभ्रम[2]द्योधरावरणं राजभवनमिव विचित्रमत्त[3]वारणं वैशेषिकनयमिव द्रव्यगुण[4]स्थिरीकरणप्रवीणं वणिगापणमिव धृतपृथु[5]लतुलं सरइव बहुकीला[6]लंकृतं विशा[7]लमपि चन्द्रशा[8]लाशोभितशिरःप्रदेशं मानोन्न[9]तमपि विमाना[10]धिकश्रीकं टङ्कपरिष्कृ[11]तमपि विट[12]ङ्कशोभाश्रयमाकल्पस्थायिनं दृढं पुरतः सभामण्डपमण्डितमभिनवं निरमीमपत्प्रासादम् ॥

मन्ये यत्र सुरापगातटचलद्वीचीभृशान्दोलन-
प्राप्तोत्कर्षतुषारमन्दपवने वासाय बद्धस्पृहः ।
कैलासाचलनित्यवासविरसो मन्दादरो मन्दरे
सान्निध्यं बहुमन्यते स्म सगणः श्रीपार्वतीवल्लभः ॥ १६९ ॥

तस्मिन्सुन्दरमन्दिरे दृढतरे संपूर्णकल्पाकृतो
पत्नी तस्य बताच्र्यदेवनिवहानाह्वातुकामा किमु ।
शैवं प्राप पदं प्रसूय तनयामल्पायुषं हा यतः
श्रेयांसि प्रबलान्तरायसहितान्याप्तागमे शुश्रुम ॥ १७० ॥

पुत्रीकृत्य विधानतो द्विजसुतं पञ्चाब्ददेश्यं मृतां
वैतानाग्निसमस्तपात्रसहितां संस्कृत्य स प्रेयसीम् ।
तादृग्दारवियोगशङ्कुमनिशं चित्ते वहन् दुःसहं
धैर्येणैव यथापुरं कतिपयं कालं बुधोऽयापयत् ॥ १७१ ॥

---

१ दर्भमुष्टिः वेदिश्च पाषाणानां वितर्दिका च । २ संभ्रमादो त्वराजनको योधानां रावणो यत्र । सम्यक् भ्रमदयःकीलं धरत्यावरणं यत्र । ३ मदयुक्ता गजा यत्र । विचित्रो मत्तवारणो निर्व्यूहो यत्र । ४ द्रव्यादिसाधकत्वात् । धनानश्वरतासंपादकत्वाच्च । ५ स्तम्भाधारप्रस्तरा मानदण्डाश्च । ६ बहुजलं कृतं कीलैरलंकृतं च । ७ विस्तृतं शालारहितं च । ८ शिरोगृहेण । ९ प्रमाणेन । १० प्रमाणशोभारहितं व्योमयानापेक्षया रम्यं च । ११ शस्त्रविशेषैर्निर्मितम् । १२ टङ्कजन्यशोभारहितं कपोतपालिकाभूषितं च ।

शमीतरुरिवोद्वहन् हृदयदाहिदुःखानलं
ज्वरेण महता बत प्रतिदिनं प्रशुष्यत्तनुः ।
विचार्य चपलाचलं भवमसौ निसर्गारसं
त्वरामतनुतादराद्धुरिहरप्रतिष्ठाविधौ ॥ १०२ ॥

सञ्जीकृत्य समस्तवस्तुनिचयं देवप्रतिष्ठोचितं
मूर्तीः श्वेतदृषद्भिरुत्तमतमाः संपाद्य च द्योसदाम् ।
वृत्वा ऽऽचार्यमशेषतद्विधिविदं संभाव्य चर्त्विग्गणं
प्रारब्धुं निदिदेश तीव्ररुजयाक्रान्तो ऽपि वैधं विधिम् ॥ १०३ ॥

नन्दाग्न्यङ्कधरामिताब्दगसिताषाढे दशम्यां विधा-
वास्थाप्यन्त यथाविधानममुना तत्पञ्चसूचीमितम् ।
रुद्रैकादशकं फणीन्द्रशयनः सूर्यो गणेशः शिवा
गङ्गाभैरवतार्क्ष्यमारुतिवृषश्रीदक्षिणामूर्तयः ॥ १०४ ॥

आहूता विबुधास्तदावनिगुरुं नालोक्य संस्थापने
निर्धार्यातिरुजार्दितं तमगमन् यां दुर्दशां दुःखिताः ।
स्मर्तुं वक्तुमिमां विलेखितुमपि स्याम क्षमाः स्यान्न चे-
च्चेतो दूनतमं सगद्गदजडा वाणी तनुः स्तम्भिता ॥ १०५ ॥

श्रद्धोद्रेकमनीदृशे ऽपि समये दृष्ट्वा प्रमोदेन वा
नायातो नियतं रुजार्दित इति प्राप्तेन शोकेन वा ।
निर्यद्बाष्पजलाकुलाक्षियुगलाः सभ्याः शिलानिश्चला
नाविन्दन्त विशेषदर्शनविधौ दाक्ष्यं सधैर्या अपि ॥ १०६ ॥

पूर्वेह्न्यधिवासितान्सुरवरान् संस्थाप्य तस्मिन्दिने
संप्राप्तं सहचर्त्विजं गुरुवरं संपूज्य धेन्वादिभिः ।

सम्यक् पर्यवसायिताखिलविधिः कृत्यावशेषोज्झितो
ब्रह्मण्येव निवेश्य चित्तमनिशं रागं भवे ऽसौ जहौ ॥ १७७ ॥

श्रोतुं वक्तुमपाटवं यदभवद् द्रष्टुं मनाक् स्पन्दितुं
तच्चित्तभ्रमसंनिपातजमिति भ्राम्यन्ति के चिन्मुधा ।
संध्योपास्तिशिवार्चनश्रुतिशिरःपाठावधानैर्वयं
संपन्नः प्रणवैकतानहृदसावित्येव मन्यामहे ॥ १७८ ॥

आरोग्यार्थिभिरर्पितं बहु हसन् यद्भेषजं सो ऽपिबत्
संपत्तित्वरितः कृताखिलविधिर्मत्वा जनान् बालिशान् ।
आशिश्वासिषया रुजा धृतित इत्यूचुः चणावेत्तका
ब्रह्मात्मैक्यविभावनादिति वयं नित्येत्तका मन्महे ॥ १७९ ॥

इत्थमतिवाह्य स्तोकमनेहसमालोचयन्नेकदिनावशिष्टमुत्तरायणं वसुमतीं विहातुकामो व्यावर्तितनिखिलविषयवासनः प्रणवार्थैकतानमना वितीर्य विप्रनिवहेभ्यो भूरिशो दानानि चिरकालसकलविद्याभारवहनश्रान्तइव बहुमन्यमानो दीर्घनिद्रां त्रयश्चत्वारिंशत्तमे वर्षे यशसैव भूमण्डलममण्डयन्मन्ये च नियतमवापदखण्डब्रह्मरूपताम् ॥

नातथ्यां क्रिमपीह वाचमवदं नावर्णयं बन्दिव-
न्नात्युक्तिं क्व चिदाश्रयं न कविताप्रागल्भ्यमीषद् व्यधाम् ।
नूनं विस्तरवीक्षणालसमतीन् दृष्ट्वा जनान् संकुच-
द्वाक्यः किं तु गुणैकदेशकथनेनापावयं स्वं वचः ॥ १८० ॥

श्रीमत्तातनृसिंहशास्त्रिचरणस्ववृन्दसंसेविनः
पूज्यश्रीगुरुबालशास्त्रिकरुणापीयूषपूतात्मनः ।
नन्दाग्न्यङ्कमहीमिते विरचिता संवत्सरे वैक्रमे
स्याद् गङ्गाधरशास्त्रिणः कृतिरियं विद्वज्जनानां मुदे ॥ १८१ ॥ इति ॥

इति श्री ६ बालशास्त्रिजीवनवृत्तान्तः ॥